# अनुक्रमणिका

# पठत संस्कृतम्

पठत संस्कृतम्, वदत संस्कृतम्
लसतु संस्कृतं चिरं गृहे गृहे च पुनरपि।।
पठत.....।।

ज्ञानवैभवं वेदवाङ्मयं
लसति यत्र भवभयापहारि मुनिभिरार्जितम्।
कीर्तिरार्जिता यस्य प्रणयनात्
व्यास-भास-कालिदास-बाण-मुख्यकविभिः।।
पठत.....।।

स्थानमूर्जितं यस्य मन्वते
वाग्विचिन्तका हि वाक्षु यस्य वीक्ष्य मधुरताम्।
यद्विना जना नैव जानते
भारतीयसंस्कृतिं सनातनाभिधां वराम्।।
पठत.....।।

जयतु संस्कृतम्, संस्कृतिस्तथा
संस्कृतस्य संस्कृतेश्च प्रणयनाच्च मनुकुलम्।
जयतु संस्कृतम्, जयतु मनुकुलम्
जयतु जयतु संस्कृतम्, जयतु जयतु मनुकुलम्।।
पठत.....।।

– श्री मञ्जुनाथशर्मा

# मनसा सततं स्मरणीयम्

मनसा सततं स्मरणीयम्
वचसा सततं वदनीयम्
लोकहितं मम करणीयम्।। लोकहितम्.....।।

न भोगभवने रमणीयम्
न च सुखशयने शयनीयम्।
अहर्निशं जागरणीयम्
लोकहितं मम करणीयम्।। लोकहितम्.....।।

न जातु दुःखं गणनीयम्
न च निजसौख्यं मननीयम्।
कार्यक्षेत्रे त्वरणीयम्
लोकहितं मम करणीयम्।। लोकहितम्.....।।

दुःखसागरे तरणीयम्
कष्टपर्वते चरणीयम्।
विपत्तिविपिने भ्रमणीयम्
लोकहितं मम करणीयम्।। लोकहितम्.....।।

गहनारण्ये घनान्धकारे
बन्धुजना ये स्थिता गह्वरे।
तत्र मया सञ्चरणीयम्
लोकहितं मम करणीयम्।। लोकहितम्.....।।

– डा० श्रीधर भास्कर वर्णेकरः

# मुनिवरविकसित-कविवरविलसित

मुनिवरविकसित-कविवरविलसित-
मञ्जुलमञ्जूषा, सुन्दरसुरभाषा।
अयि मातस्तव पोषणक्षमता
मम वचनातीता, सुन्दरसुरभाषा।।
मुनिवर.....।।

वेदव्यास-वाल्मीकि-मुनीनां
कालिदास-बाणादिकवीनाम्।
पौराणिक-सामान्य-जनानां
जीवनस्य आशा, सुन्दरसुरभाषा।।
मुनिवर.....।।

श्रुतिसुखनिनदे सकलप्रमोदे
स्मृतिहितवरदे सरसविनोदे।
गति-मति-प्रेरक-काव्यविशारदे
तव संस्कृतिरेषा, सुन्दरसुरभाषा।।
मुनिवर.....।।

नवरसरुचिरालङ्कृति-धारा
वेदविषय-वेदान्त-विचारा।
वैद्य-व्योम-शास्त्रादि-विहारा
विजयते धरायाम्, सुन्दरसुरभाषा।।
मुनिवर.....।।

– श्री नारायणभट्टः

# सादरं समीहताम्

सादरं समीहतां वन्दना विधीयताम्।
श्रद्धया स्वमातृभू-समर्चना विधीयताम्।।
सादरं समीहतां.....।।

आपदो भवन्तु वा, विद्युतो लसन्तु वा
आयुधानि भूरिशोऽपि मस्तके पतन्तु वा।
धीरता न हीयताम्, वीरता विधीयतां
निर्भयेन चेतसा पदं पुरो निधीयताम्।।
सादरं समीहतां.....।।

प्राणदायिनी इयं त्राणदायिनी इयं
शक्तिमुक्तिभक्तिदा सुधाप्रदायिनी इयम्।।
एतदीयवन्दने सेवनेऽभिनन्दने
साभिमानमात्मनो जीवनं प्रदीयताम्।।
सादरं समीहतां.....।।

– श्री वासुदेव द्विवेदी शास्त्री

# आयाहि रेऽऽ

नायकः –आयाहि रेऽऽ आयाहि रेऽऽ आयाहि रेऽऽ
विहायसि सराग-रश्मि-चन्द्रमाः
तनोति सान्द्र-रोचि-मञ्जु-चन्द्रिकाः
सिन्धुरावघोषिताः रोदसीकन्दराः
यान्तु यानपात्रचालकाः सधीवराः।।
आयाहि.....।।

अनुयायिनः – याहि रे! याहि रे! याहि रे! याहि रे! याऽऽहि।।

नायकः – चन्द्रहासमज्जिता तामसी प्रिया
सर्व-देह-कान्ति-पुञ्ज-मञ्जु-वल्गना।
निश्चला विभासते तारलोचना
यान्तु यानपात्रचालकाः सधीवराः।।
आयाहि.....।।

अनुयायिनः – याहि रे! याहि रे! याहि रे! याहि रे! याऽऽहि।।

नायकः – सागरेण चुम्बिता चन्द्रिका मुदा
राजते विलास-हास-लास्य-चित्रिता
रागिणीव भासते रागरञ्जिता
यान्तु यानपात्रचालकाः सधीवराः।।
आयाहि.....।।

अनुयायिनः – याहि रे! याहि रे! याहि रे! याहि रे! याऽऽहि।।

– श्री परीक्षित शर्मा

# सुरससुबोधा विश्वमनोज्ञा

सुरससुबोधा विश्वमनोज्ञा
ललिता हृद्या रमणीया।
अमृतवाणी संस्कृतभाषा
नैव क्लिष्टा न च कठिना।। नैव क्लिष्टा..........।।

कविकोकिल-वाल्मीकि-विरचिता
रामायणरमणीयकथा।
अतीव-सरला मधुरमञ्जुला
नैव क्लिष्टा न च कठिना।। नैव क्लिष्टा..........।।

व्यासविरचिता गणेशलिखिता
महाभारते पुण्यकथा।
कौरव-पाण्डव-सङ्गरमथिता
नैव क्लिष्टा न च कठिना।। नैव क्लिष्टा..........।।

कुरुक्षेत्र-समराङ्गण-गीता
विश्ववन्दिता भगवद्गीता
अमृतमधुरा कर्मदीपिका
नैव क्लिष्टा न च कठिना।। नैव क्लिष्टा..........।।

कविकुलगुरु-नव-रसोन्मेषजा
ऋतु-रघु-कुमार-कविता।
विक्रम-शाकुन्तल-मालविका
नैव क्लिष्टा न च कठिना।। नैव क्लिष्टा..........।।

# मृदपि च चन्दनमस्मिन् देशे

मृदपि च चन्दनमस्मिन् देशे ग्रामो ग्रामः सिद्धवनम्।
यत्र च बाला देवीस्वरूपा बालाः सर्वे श्रीरामाः।।

हरिमन्दिरमिदमखिलशरीरं
धनशक्ती जनसेवायै।
यत्र च क्रीडायै वनराजः
धेनुर्माता परमशिवा।।

नित्यं प्रातः शिवगुणगानं
दीपनुतिः खलु शत्रुपरा।। यत्र च.....।।

भाग्यविधायि निजार्जितकर्म
यत्र श्रमः श्रियमर्जयति।
त्यागधनानां तपोनिधीनां
गाथां गायति कविवाणी।।

गङ्गाजलमिव नित्यनिर्मलं
ज्ञानं शंसति यतिवाणी।। यत्र च.....।।

यत्र हि नैव स्वदेहविमोहः
युद्धरतानां वीराणाम्।
यत्र हि कृषकः कार्यरतः सन्
पश्यति जीवनसाफल्यम्।।

जीवनलक्ष्यं न हि धनपदवी
यत्र च परशिवपदसेवा।। यत्र च.....।।

# भुवनमण्डले नवयुगमुदयतु

भुवनमण्डले नवयुगमुदयतु सदा विवेकानन्दमयम् ।
सुविवेकमयं स्वानन्दमयम् ।। ध्रुवम् ।।

तमोमयं जनजीवनमधुना निष्क्रियतालस्य ग्रस्तम् ।
रजोमयमिदं किं वा बहुधा क्रोधलोभमोहामिहतम् ।
भक्तिज्ञानकर्मविज्ञानैः भवतु सात्त्विकोद्योतमयम् ।। १ ।।
..... सदा विवेकानन्दमयम् ।

वह्निवायुजलबलविवर्धकं पाञ्चभौतिकं विज्ञानम् ।
सलिलनिधितलं गगनमण्डलं करतलफलमिव कुर्वाणम् ।
दिक्षुविकीर्णं मनुजकुलमिदं घटयतु चैककुटुम्बमयम् ।। २ ।।
..... सदा विवेकानन्दमयम् ।

सगुणाकारम् ह्यगुणाकारम् एकाकारमनेकाकारम् ।
भजन्ति एते भजन्तु देवं स्वस्वनिष्ठया विमत्सरम् ।
विश्वधर्ममिममुदारभावं प्रवर्धयतु सौहार्दमयम् ।। ३ ।।
..... सदा विवेकानन्दमयम् ।

जीवे जीवे शिवःस्वरूपं सदा भावयतु सेवायाम् ।
श्रीमदूर्जितं महामानवं समर्चयतु निजपूजायाम् ।
चरतु मानवोऽयं सुहितकरं धर्मं सेवात्यागमयम् ।। ४ ।।
..... सदा विवेकानन्दमयम् ।

# कृत्वा नवदृढसङ्कल्पम्

कृत्वा नवदृढसङ्कल्पं
वितरन्तो नवसन्देशम्
घटयामो नवसङ्घटनं
रचयामो नवमितिहासम्।।
कृत्वा............।।

नवमन्वन्तरशिल्पिनः
राष्ट्रसमुन्नतिकाङ्क्षिणः
त्यागधनाः कार्यैकरताः
कृतिनिपुणाः वयमविषण्णाः।।
कृत्वा............।।

भेदभावनां निरासयन्तः
दीनदरिद्रान् समुद्धरन्तः
दुःखवितप्तान् समाश्वसन्तः
कृतसङ्कल्पान् सदा स्मरन्तः।।
कृत्वा............।।

प्रगतिपथान्नहि विचलेम
परम्परां संरक्षेम
समुत्साहिनो निरुद्वेगिनो
नित्यनिरन्तरगतिशीलाः।।
कृत्वा............।।

– श्री जनार्दन हेगडे

# ध्येयपथिकसाधकऽऽ

ध्येयपथिकसाधकऽऽ
कार्यपथे साधयऽऽ
मृदु हसन् मधु किरन् मातरं सदा स्मरन्।।

जीवनं न शाश्वतम्, वैभवं न हि स्थिरम्
स्वार्थलेपनं विना, यत् कृतं हि तच्चिरम्
सरलता स्वजीवनेऽऽ
चिन्तने सदोच्चताऽऽ
समाजपोषिता वयं समाजपोषकाश्चिरम्।।
।। ध्येयपथिकसाधकऽऽ.....।।

यच्च नमसि चिन्त्यते, यच्च कीर्त्यते गिरा
तच्च मूर्तरूपताम्, एति नित्यजीवने
जनन्यनन्यचरणयोःऽऽ
समर्पितस्वजीवनाःऽऽ
ध्येयसाधनव्रता वयं भवेम सङ्गताः।।
।। ध्येयपथिकसाधकऽऽ.....।।

स्मरत्विहाग्रजन्मनाम्, त्यागबलिसमर्पणम्
सिंहकुलसमुद्भवाः सिंहविक्रमा वयम्
सन्तु कष्टकोटयोःऽऽ
भवतु विघ्नवर्षणम्ऽऽ
सकृत्प्रतिज्ञका वयं भजेम नो पलायनम्।।
।। ध्येयपथिकसाधकऽऽ.....।।

– श्री जनार्दन हेगडे

# संस्कृतस्य सेवनम्

संस्कृतस्य सेवनम्, संस्कृताय जीवनम्।
लोकहितसमृद्धये भवतु तनुसमर्पणम्।।

कार्यगौरवं स्मरन्
विघ्नवारिधिं तरन्
लक्ष्यसिद्धिमक्षिसात्करोमि सोद्यमः स्वयम्।।
यावदेति संस्कृतम्, प्रतिजनं गृहं गृहम्
तावदविरता गतिस्तावदनुपदं पदम्।। १।।
।। संस्कृतस्य सेवनम्......।।

कामये न सम्पदं
भोगसाधनं सुखम्
किञ्चिदन्यदाद्रिये विना न संस्कृतोन्नतिम्।
गौरवास्पदं पदम्, नेतुमद्य संस्कृतम्
बद्धकटिरयं जनो निधाय जीवनं पणम्।। २।।
।। संस्कृतस्य सेवनम्......।।

भाषिता च वागियं
भाषिता भवेद् ध्रुवम्
भाष्यमाणतां समेत्य राजतां पुनश्चिरम्
भरतभूमिभूषणं सर्ववाग्विभूषणम्
संस्कृतिप्रवाहकं संस्कृतं विराजताम्।। ३।।
।। संस्कृतस्य सेवनम्......।।

– श्री जनार्दन हेगडे

# रचयेम संस्कृतभवनम्

ग्रामे नगरे समस्तराष्ट्रे
रचयेम संस्कृतभवनम्
इष्टिकां विना मृत्तिकां विना
केवलसम्भाषणविधया
संस्कृतसम्भाषणकलया ।।

शिशुबालानां स्मितमृदुवचने
युवयुवतीनां मञ्जुभाषणे
वृद्धगुरूणां वत्सलहृदये
रचयेम संस्कृतभवनम् ।। १ ।।

अरुणोदयतः सुप्रभातम्
शुभरात्रिं निशि संवदेम
दिवानिशं संस्कृतवचनेन
रचयेम संस्कृतभवनम् ।। २ ।।

सोदर-सोदरी-भाव-बन्धुरं
मातृप्रेमतो बहुजनरुचिरं
वचनललितं श्रवणमधुरं
रचयेम संस्कृतभवनम् ।। ३ ।।

मूलशिला सम्भाषणमस्य
हिन्दुजनैक्यं शिखरमुन्नतं
सोपानं श्रवणादिविधानं
रचयेम संस्कृतभवनम् ।। ४ ।।

– श्री गणपय्यहोललः

# वन्दे भारतमातरम्

वन्दे भारतमातरं वद, भारत! वन्दे मातरम्
वन्दे मातरम्, वन्दे मातरम्, वन्दे मातरम्।।

जन्मभूरियं वीरवराणां त्यागधनानां धीराणाम्
मातृभूमये लोकहिताय च नित्यसमर्पितचित्तानाम्।
जितकोपानां कृतकृत्यानां वित्तं तृणवद् दृष्टवताम्
मातृसेवनादात्मजीवने सार्थकतामानीतवताम्।।१।।
।। वन्दे भारतमातरं ......।।

ग्रामे ग्रामे कर्मदेशिकास्तत्त्ववेदिनो धर्मरताः
अर्थसञ्चयस्त्यागहेतुको धर्मसम्मतः काम इह।
नश्वरबुद्धिः क्षणपरिवर्तिनि काये आत्मन्यादरधीः
जातो यत्र हि स्वस्य जन्मना धन्यं मन्यत आत्मानम्।। २।।
।। वन्दे भारतमातरं ......।।

मातस्त्वत्तो वित्तं चित्तं स्वत्वं प्रतिभा देहबलम्
नाहं कर्ता, कारयसि त्वम्, निःस्पृहता मम कर्मफले।
अर्पितमेतज्जीवनपुष्पं मातस्तव शुभपादतले
नान्यो मन्त्रो नान्यचिन्तनं नान्यद्देशहिताद्धि ऋते।। ३।।
।। वन्दे भारतमातरं ......।।

– श्री जनार्दन हेगडे

# संस्कृतस्य रक्षणाय

संस्कृतस्य रक्षणाय बद्धपरिकरा वयम्।
संस्कृतेः प्रवर्धनाय दृढनिधिर्भवेदिदम्।।

संस्कृतस्य महिमवर्णनेन नास्ति साधितं
सततसम्भाषणेन तस्य जीवनं स्थिरम्।
जनमुखेन भाषितं ननु जगति जीवितं
राजते चिरं समस्तराष्ट्रमान्यतास्पदम्।। १।।
।। संस्कृतस्य रक्षणाय......।।

संस्कृतस्य सेवनं मातृसेवासमं
तेन सम्भाषणं वाङ्मातृपूजनम्।
मातृभिः प्रवर्तनेन मातृभाषापरं
सरलसम्भाषणेन लसति बालादृतम्।। २।।
।। संस्कृतस्य रक्षणाय......।।

राजपोषणात् पुरा नीतमिदं वैभवं
लोकशक्तिकेन्द्रितं स्थास्यतीह केवलम्।
शिक्षकास्तदर्थमेव त्यागशालिनः स्युः।
संस्कृतोज्जीवनाय प्राप्तजीवना ध्रुवम्।। ३।।
।। संस्कृतस्य रक्षणाय......।।

– श्री गणपय्यहोललः

# भारतमाता बुधजनगीता

भारतमाता बुधजनगीता
निर्मलगङ्गाजलपूता ।।

शिरसि विराजित-हिमगिरिमुकुटम्
चरणे हिन्दु-महोदधि-सलिलम्
जघने सस्य-लता-तरु-वसनम्
जय भारतजननी ।। १ ।।
।। भारतमाता...... ।।

ऋषिवर-घोषित-मन्त्र-पुलकिता
कविवर-गुम्फित-पावन-चरिता
धीर-वीर-नृप-शौर्य-पालिता
जय भारतजननी ।। २ ।।
।। भारतमाता...... ।।

मम मनसि सदा तव पदयुगलम्
संस्कृत-संस्कृति-सतत-चिन्तनम्
भाव-राग-लय-ताल-मेलनम्
जय भारतजननी ।। ३ ।।
।। भारतमाता...... ।।

# कुरुत वीराः

कुरुत वीराः कर्मधीराः मातृपदयुगवन्दनम्।
मातृवन्दनतो नितान्तम् आप्यतां परमं पदम्।।

वदत किं वो मञ्जुवदने दीनतापरिलाञ्छनम्।
स्मरत यूयं वीरमुनिकुलसम्भवा निजविक्रमम्।। १।।
।। कुरुत वीराः .....।।

त्यजत हीनविषादभावं सर्वश्रेयोहारकम्।
जयत सर्वजनान्तरङ्गं राष्ट्रवैभवसाधकम्।। २।।
।। कुरुत वीराः .....।।

चरत धर्मपथेन पूर्वजदर्शितेन दिवानिशम्।
नयत विश्वगुरुत्वमचिरात् आर्षभारतमातरम्।।
पुनरार्षभारतमातरम्।। ३।।
।। कुरुत वीराः .....।।

# अवनीतलं पुनरवतीर्णा स्यात्

अवनीतलं पुनरवतीर्णा स्यात्
संस्कृतगङ्गाधारा
धीरभगीरथवंशोऽस्माकं
वयं तु कृतनिर्धाराः।।

निपततु पण्डितहरशिरसि
प्रवहतु नित्यमिदं वचसि
प्रविशतु वैयाकरणमुखं
पुनरपि वहताज्जनमनसि
पुत्रसहस्रं समुद्धृतं स्यात्
यान्तु च जन्मविकाराः।। धीरभगीरथ.....।।

ग्रामं ग्रामं गच्छाम
संस्कृतशिक्षां यच्छाम
सर्वेषामपि तृप्तिहितार्थं
स्वक्लेशं न हि गणयेम
कृते प्रयत्ने किं न लभेत
एवं सन्ति विचाराः।। धीरभगीरथ.....।।

या माता संस्कृतिमूला
यस्या व्याप्तिस्सुविशाला
वाङ्मयरूपा सा भवतु
लसतु चिरं सा वाङ्माला
सुरवाणीं जनवाणीं कर्तुं
यतामहे कृतिशूराः।। धीरभगीरथ.....।।

– श्री नारायणभट्टः

# राष्ट्रसेवनकार्यमेतत्

राष्ट्रसेवनकार्यमेतत् देवपूजनकार्यमेव ।
संस्कृताय हि कार्यकरणं नित्यजीवनभागभूतम् ।।

शास्त्ररक्षणशिक्षणार्थं वेदवाङ्मयबोधनार्थम्
दिव्यसंस्कृतिपोषणार्थं भव्यभारतवैभवार्थम्
संस्कृतस्य तु सेवकोऽहं जीवनार्पणदीक्षितोऽहम् ।। १ ।।
।। राष्ट्रसेवनकार्यमेतत्...... ।।

लोकसंग्रहपुण्यकार्यं साधयेयं कठिनतपसा
सर्वजातिषु सामरस्यं कारयेयं स्नेहवचसा
सकलशक्तिं संस्कृतार्थं योजयेयं पूर्णमनसा ।। २ ।।
।। राष्ट्रसेवनकार्यमेतत्...... ।।

लोकचेतसि धर्मरागं स्वाभिमानं देशवासिषु
आनयेयं सङ्घभावं प्रेमभावं कार्यकर्तृषु
वर्धयेयं सहजस्नेहं कार्यपद्धतिमाश्रयेयम् ।। ३ ।।
।। राष्ट्रसेवनकार्यमेतत्...... ।।

विश्वमखिलं प्रेरयेयं त्यागसंयुतजीवनाय
प्रतिपदं ननु चिन्तयेयं संस्कृतोन्नतिसाधनाय
क्षणलवं खलु यापयेयं जगति धर्मस्थापनाय ।। ४ ।।
।। राष्ट्रसेवनकार्यमेतत्...... ।।

# संस्कृतचित्ता भारतभक्ताः

संस्कृतचित्ता भारतभक्ता राष्ट्रनवोदयकाङ्क्षिणः ।
सुदृढमनस्का भासुरचरिता राष्ट्रं जागरयाम वयम् ।।

मातृहिताय समग्रसमर्पितपुण्यधनानां राष्ट्रमिदम्
सत्यविनिष्ठितकर्मरतानां धर्मपराणां भूमिरियम् ।
विश्वहितं मम जीवनसुखमिति कलितवतां ननु देशोऽयम्
इमामनन्तां नयाम सुहृदो जवेन शाश्वतपरमपदम् ।। १ ।।
।। संस्कृतचित्ता भारतभक्ता...... ।।

सर्वे शान्तिमवाप्नुयुरिति नः पूर्वजचिन्तनमतिशुभदम्
स्नेहपुरस्सरजीवनमनिशं स्यादिति तेषामभिलषितम् ।
वयमपि यत्नं विदध्महे निजपूर्वजवाञ्छितपरिपूर्त्यै
तदेकमस्मज्जीवनलक्ष्यं मन्येमहि वयमनवरतम् ।। २ ।।
।। संस्कृतचित्ता भारतभक्ता...... ।।

भवतु हि कण्टकमयमयनं नो स्यादायतनं सुदुष्करम्
भवतु समन्तात् विपदामयुतं भवतु कदाचिन्नो मरणम् ।
तथापि न भवतु विचलनमिह नः कदापि धर्म्याल्लक्ष्यपथात्
विना विलम्बं प्राप्स्यामो वयम् अस्मज्जीवनसाफल्यम् ।। ३ ।।
।। संस्कृतचित्ता भारतभक्ता...... ।।

# सङ्घटिता वयमिह

सङ्घटिता वयमिह याम
राष्ट्रसमर्चां करवाम।।
।। सङ्घटिता.....।।

न कमपि भेदं गणयाम
अनुपमस्नेहं वितराम।
स्यादपि कष्टशतं सततं
क्रियते कार्यमिदं नियतम्।। १ ।।
।। सङ्घटिता.....।।

आशापाशशतैर्युक्तान्
ध्येयामृततो दूरगतान्।
सुप्तान् बन्धून् जागरयाम
राष्ट्रसुकर्मसु लगयाम।। २ ।।
।। सङ्घटिता.....।।

भारतमस्माकं जननी
स्वर्गादपि या गरीयसी।
विश्वगुरुं तां करवाम
जन्मसफलतां विन्दाम।। ३ ।।
।। सङ्घटिता.....।।

# भारतं भारतं भवतु भारतम्

भारतं भारतं भवतु भारतम्
भारतं भारतं भवतु भारतम्।।

शक्तिसम्भृतं युक्तिसम्भृतं
शक्तियुक्तिसम्भृतं भवतु भारतम्।।
भारतम्.....।।

शस्त्रधारकं शास्त्रधारकं
शस्त्रशास्त्रधारकं भवतु भारतम्।।
भारतम्.....।।

रीतिसंस्कृतं नीतिसंस्कृतं
रीतिनीतिसंस्कृतं भवतु भारतम्।।
भारतम्.....।।

कर्मनैष्ठिकं धर्मनैष्ठिकं
कर्मधर्मनैष्ठिकं भवतु भारतम्।।
भारतम्.....।।

भक्तिसाधकं मुक्तिसाधकं
भक्तिमुक्तिसाधकं भवतु भारतम्।।
भारतम्.....।।

# पूर्णविजयसङ्कल्पोऽस्माकम्

पूर्णविजयसङ्कल्पोऽस्माकं सततपरिश्रमशीलवताम्
आयुगमविरतमनुवर्तत इह राष्ट्रधर्मसमुपासनम् ।।
वन्दे मातृभुवं वन्दे, वन्दे जगदम्बां वन्दे ।।

पुण्यपुरातनदेशोऽस्माकं मानवतार्चनशक्तिमताम्
प्रवहति पावनसंस्कृतिगङ्गा किल्विषजातमपादधती
सकलविश्वमङ्गलसंरचने जुहोति सर्वोऽप्यात्मानम्
आयुगमविरत...... ।।

परमो मन्त्रः समरसता नः शक्तिसम्भृतं राष्ट्रमिदम्
पूर्वजगौरवगाथास्माकं मार्गदर्शिका प्रेरिका
भविष्यपथमुज्ज्वलमाधातुं शक्तिं सञ्चिनुमो नियतम् ।।
आयुगमविरत...... ।।

मातृभूमिराराध्येयं नो गतिरस्माकं सैव परा
ईशकार्यमिदमेवास्माकं जीवितैकसङ्कल्पनम्
सज्जननिर्मितकार्यपथेऽस्मिन् ननु यामो वयमनवरतम् ।।
आयुगमविरत...... ।।

# भारतभूषा संस्कृतभाषा

भारतभूषा संस्कृतभाषा विलसतु हृदये हृदये।
संस्कृतिरक्षा राष्ट्रसमृद्धिः भवतु हि भारतदेशे।।

श्रद्धा महती निष्ठा सुदृढ़ा स्यान्नः कार्यरतानाम्
स्वच्छा वृत्तिर्नव उत्साहो यत्नो विना विरामम्।
न हि विच्छित्तिश्चित्तविकारः पदं निदध्मस्सततम्
सत्यपि कष्टे विपदि कदापि वयं न यामो विरतिम्।।
।। भारतभूषा संस्कृतभाषा......।।

श्वासे श्वासे रोमसु धमनिषु संस्कृतवीणाक्वणनम्
चेतो वाणी प्राणाः कायः संस्कृतहिताय नियतम्।
श्वसिमि प्राणिमि संस्कृतवृद्ध्यै नमामि संस्कृतवाणीम्
पुष्टितुष्टिस्तुसंस्कृतवाक्तः तस्मादृते न किञ्चित्।।
।। भारतभूषा संस्कृतभाषा......।।

नाहं याचे हारं मानं न चापि गौरववृद्धिम्
नो सत्कारं वित्तं पदवीं भौतिकलाभं कञ्चित्
यस्मिन् दिवसे संस्कृतभाषा विलसेज्जगति समग्रे
भव्यं तन्महदद्भुतदृश्यं काङ्क्षे वीक्षितमाशु।।
।। भारतभूषा संस्कृतभाषा......।।

# पाठयेम संस्कृतं जगतिसर्वमानवान्

पाठयेम संस्कृतं जगतिसर्वमानवान्
प्रापयेम भारतं सपदि परमवैभवम्।।
।। पाठयेम.....।।

व्यक्तियोजकत्वमेव नायकत्वलक्षणम्
धर्मसेवकत्वमेव शास्त्रतत्त्वचिन्तनम्।
स्नेहशक्ति-शील-शौर्य-देशभक्तिभूषितम्
साधयेम शीघ्रमेव कार्यकर्तृमण्डलम्।।
।। पाठयेम.....।।

हिन्दुबन्धुमेलनेन सर्वदोषनाशनम्
उच्चनीचजातिराज्यभेदभाववारणम्।
सामरस्य रक्षणेन शान्तिपूर्णजीवनम्
कालयोग्यमेतदेव मोक्षदायि दर्शनम्।।
।। पाठयेम.....।।

जीवनस्य कार्यमेव राष्ट्रकर्मसाधना
सङ्घशक्तिवर्धनाय दिव्यभव्ययोजना।
व्यक्तिरस्तुवर्तिकेति मामकीनभावना
साधितास्तु माधवस्य विश्वविजयकामना।।
।। पाठयेम.....।।

# प्रवहतु नित्यं संस्कृतगङ्गा

प्रवहतु नित्यं संस्कृतगङ्गा
सत्यसनातनधर्मवृद्धये।
तदर्थमस्मज्जीवनपुष्पं
समर्पयामो निजकार्ये।।
।। प्रवहतु नित्यं.....।।

वयं मिलाम प्रतिसप्ताहम्
ग्रामे नगरे कार्यस्थाने।
पठनपाठने व्यापृता वयम्
सुवर्धयाम सङ्घटनम्।।
।। प्रवहतु नित्यं.....।।

स्वाध्यायेन समेधयामहे
परम्परां निजविज्ञानम्।
हृदयपङ्कजं विकासयामः
संस्कृतपाठनयज्ञेन।।
।। प्रवहतु नित्यं.....।।

विवेकवाणी गुञ्जतु हृदये
सत्यभाषणं सुहृज्जीवनम्।
अविरतचलनं सरलजीवनम्
कार्यसाधकं भवतु सदा।।
।। प्रवहतु नित्यं.....।।

# जय जय भारतरमणी धरणी

जय जय भारतरमणी धरणी
जय जय जय जय जननी।।

गङ्गासिन्धूकुन्तलभारः सिन्धूराङ्कितमलिकम्।
श्यामलकोमलसस्यं वसनं सन्ध्ये खलु तव नयने।। जय.....।।

हिमशैलस्तव रजतकिरीटं नूपुरमिहतु कुमारी।
गोदा तव शुभवक्षसि राजितगोमेदकमणिमाल्यम्।। जय.....।।

वङ्गसमुद्रतरङ्गाः वलयाः अङ्गे चन्दनलेपाः।
सिन्धुसमुद्रतरङ्गैर्वक्षसि ध्रियते रुचिराभरणम्।। जय.....।।

# मार्जाल! रे मार्जाल!

मार्जाल! रे मार्जाल!
कुत्र गतोऽसि त्वम्?
अत्रैवास्मि आगतोऽस्मि
राजगृहाद् एवम्।

मार्जाल! रे मार्जाल!
किं दृष्टं तत्र?
तावद्दीर्घः मूषकपुत्रः
न हि दृष्टोऽन्यत्र!!

# नूपुरधारिबालकृष्ण! एहि

नूपुरधारिबालकृष्ण! एहि
मम श्यामसुन्दर! मदनमोहन! एहि।।

तव दिव्यपाददर्शनोत्सुका वयम्।
तव दिव्यनामसंकीर्तने रताः।।

देवकीनन्दन! राधाजीवन!
केशव!..... हरे! माधव!
गोकुलबाल! हे एहि एहि
गोपालनन्द! हे एहि एहि।। नूपुरधारि.....।।

अर्जुनरक्षक! अज्ञाननाशक!
केशव!..... हरे! माधव!
गीतामृत! हे एहि एहि
हृदयानन्द! हे एहि एहि।। नूपुरधारि.....।।

आश्रितवत्सल! आपद! बान्धव!
केशव!..... हरे! माधव!
ओंकाररूप! हे एहि एहि
आनन्दगीत! हे एहि एहि।। नूपुरधारि.....।।

# नमामि भारतवर्षम्

नमामि-भारतवर्षं विचित्र-पवित्र-देशम्

वेदवेदान्तगर्भं ज्ञानविज्ञानवित्तम् ।
दर्शति सत्यलोकं पूतहिमालयतीर्थम् ।।
त्रिभुजान्वितदेहं मदीयजन्मस्थानम् ।
त्यागदीप्तकिरीटं भोगमोक्षगलमालम् ।।

मोक्षकामितापस-राज्यकामिवासव ।
क्षतक्षुन्नमानस मानवसाधनक्षेत्रम् ।।

इतिहासविदितं प्रलोभितलुब्धकम् ।
बहुहस्तशासितं खण्डितलाञ्छितदेहम् ।।

युगेयुगेऽअवतीर्ण महामानवरूपम् ।
बहुवारतवारित-ताडितदुर्जनसङ्गम् ।।

पुनरपिधर्षितं शतक्षतचिह्नितम् ।
तथापि चिरदारं नवनित्यपान्थशालम् ।।

गता दुःसहरात्रिः हर्षितनव्ययात्री ।
कुरु साधनानित्यं नतुवा नश्यति सर्वम् ।।

# संस्कृतम्..... संस्कृतम्.....

संस्कृतम्.......... संस्कृतम्..........
लिख लिख लिख, वद वद वद
कुत्र यत्र अत्र तत्र श्रूयताम्
॥ संस्कृतम्........ संस्कृतम्........॥

आकुमारी-हिमाचल-घोषितम्
आर्यभाषा मातृभाषा संस्कृतम्।
जलस्थल-आकाशम्, मधुरेण कम्पितम्
वन्दे मातरम्, वन्दे संस्कृतम्
॥ संस्कृतम्........ संस्कृतम्........॥

शिरोमणि-हिमालय-शोभितम्
सागरेण मातृपादक्षालितम्
स्वर्णप्रसूभारतम्, भारतीय-ऐतिह्यम्
वन्दे भारतम्, वन्दे संस्कृतम्
॥ संस्कृतम्........ संस्कृतम्........॥

# क्रियासिद्धिः सत्त्वे

क्रियासिद्धिस्सत्त्वे भवति महतां नोपकरणे।
सेवादीक्षित! चिरप्रतिज्ञ! मा विस्मर भोस्सूक्तिम्।।

न धनं न बलं नापि सम्पदा न स्याज्जनानुकम्पा
सिद्धा न स्यात् कार्यभूमिका न स्यादपि प्रोत्साहः
आवृणोतु वा विघ्नवारिधिस्त्वं मा विस्मर सूक्तिम्।।
।। क्रियासिद्धिः सत्त्वे.....।।

आत्मबलं स्मर बाहुबलं धर परमुखप्रेक्षी मा भूः
क्वचिदपि मा भूदात्मविस्मृतिः न स्याल्लक्ष्याच्च्यवनम्।
आसादय जनमानसप्रीतिं सुचिरं संस्मर सूक्तिम्।।
।। क्रियासिद्धिः सत्त्वे.....।।

अरुणसारथिं विकलसाधनं सूर्यं संस्मर नित्यम्
शूरपूरुषान् दृढानजेयान् पदात्पदं स्मर गच्छन्
सामान्येतरदृग्भ्यस्सोदर, सिध्यति कार्यमपूर्वम्।।
।। क्रियासिद्धिः सत्त्वे.....।।

# कालिदासो जने जने

कालिदासो जने जने, कण्ठे कण्ठे संस्कृतम्।
ग्रामे ग्रामे, नगरे नगरे, गेहे गेहे संस्कृतम्।। १।।
।। कालिदासो.....।।

सरला भाषा, मधुरा भाषा, दिव्या भाषा संस्कृतम्।
मुनिजनवाणी कविजनवाणी, प्रियजनवाणी संस्कृतम्।। २।।
।। कालिदासो.....।।

वसतौ वसतौ रामचरितम्, प्रियजनभाषा संस्कृतम्
स्थाने स्थाने भारतदेशे, सदने सदने संस्कृतम्।। ३।।
।। कालिदासो.....।।

मुनिजनवाञ्छा कविजनवाञ्छा प्रियजनवाञ्छा संस्कृतम्।
वदने वदने कार्यक्षेत्रे, वार्तालापे संस्कृतम्।। ४।।
।। कालिदासो.....।।

# इदम् इमे इमानि

इदम् इमे इमानि वद त्वं नास्ति हानि।
गृहं गृहे गृहाणि मुखे मे मिष्टवाणी।।

कमलं कमले कमलानि धनी गुणी च सः दानी।
एतत् एते एतानि कदापि न स्याम् अभिमानी।।

# शूरा वयम्

शूरा वयं धीरा वयं वीरा वयं सुतराम्
गुणशालिनो बलशालिनो जयगामिनो नितराम्।।

दृढ़मानसा गतलालसाः प्रियसाहसाः सततम्
जनसेवका अतिभावुकाः शुभचिन्तका नियतम्।। १।।

धनकामना सुखवासना न च वञ्चना हृदये
ऊर्जस्वला वर्चस्वला अतिनिश्चला विजये।। २।।

गतभीतयो धृतनीतयो दृढ़शक्तयो निखिलाः
यामो वयं समराङ्गणं विजयार्थिनो बालाः।। ३।।

जगदीश हे परमेश हे सकलेश हे भगवन्
जयमङ्गलं परमोज्ज्वलं नो हि परमात्मन्।। ४।।

# एकं द्वे त्रीणि

एकं द्वे त्रीणि इह पुष्पाणि।
चत्वारि पञ्च भयं विमुच्य।।

षट सप्त अष्ट अपसर दुष्ट
नव दश उपविश वद
लिख पठ हस।।

# साधयेम देशमिमम्

साधयेम देशमिमं भव्यभारतम्
भरतभूमिशूरसिंहकिशोरा वयम्।। १।।

पाठयेम संस्कृतं प्रतिजनं गृहं गृहं
संस्कृते प्रदीपकं सनातनं शिवङ्करम्
शास्त्रसंरक्षणाय प्रतिबद्धा कटिरियम्
अर्पितं हि जीवनं संस्कृताय प्रतिक्षणम्।।
।। साधयेम देशमिमं.....।।

वारयेम भ्रष्टतामविज्ञतां च भारतात्
अलसतां प्रभीरुतां स्वार्थतां च जीवनात्
श्रम एव हि केवलं जयतीति प्रतिमुखं
जपतु चिरं सरतु पुरो भूतये पदम्पदम्।।
।। साधयेम देशमिमं....।।

हिन्दुधर्मरक्षणाय राष्ट्रभक्तिवर्धनाय
प्रवाहयेम रुधिरमिदं नश्वरं हि जीवनम्
ऐक्यमेव साधकं विघटनं हि बाधकम्
छात्रसम्मेलने प्रतिश्रृणुमो ध्येयमिदम्।।
।। साधयेम देशमिमं....।।

# जीवनस्य लक्ष्यमेव

जीवनस्य लक्ष्यमेव लोकसेवनव्रतम्
सेवया हि जीवनं सार्थकं फलान्वितम्।।

अन्धकारजीवने दीपमुद्दीपयाम
क्लेशबहुलवीथिकाकण्टकान्युत्खनाम
त्रस्तदीनबान्धवान् हस्तलम्बमुन्नयाम
न्यूनता यत्र यत्र तत्र सत्वरं हि याम।।
जीवनस्य.......।।

प्रतिजनं प्रतिदिनं ध्येयमारोपयाम
श्रद्धया विशुद्धया दीनदेवमर्चयाम
स्वार्थभावनां विना सर्वमपि समर्पयाम
जनहितं वरप्रदं हृदि चिरं स्थापयाम।।
जीवनस्य.......।।

लोकसेवनं ध्रुवं दैवसमाराधनम्
दीनबन्धुसेवनान्नास्ति परं पुण्यदम्
कार्यतत्परा वयं साधयाम दिग्जयम्
वर्धताम समेधताम् ऋद्धिमद्धि भारतम्।।
जीवनस्य.......।।

# भुवमवतीर्णा नाकस्पर्धिनी

भुवमवतीर्णा नाकस्पर्धिनी
भारतधरणीयम्, मामकजननीयम्।।

शिरसि हिमालय-मुकुट-विराजिता
पादे जलधिजलेन परिप्लुता
मध्ये गङ्गापरिसरपूता
भारतधरणीयम्, मामकजननीयम्।।
भुवमवतीर्णा.....।।

काश्मीरेषु च वर्षति तुहिनम्
राजस्थाने प्रदहति पुलिनम्
मलयस्थाने वाति सुपवनः
भारतधरणीयम्, मामकजननीयम्।।
भुवमवतीर्णा.....।।

नानाभाषि-जनाश्रय-दात्री
विविधमतानां पोषणकर्त्री
नानातीर्थ-क्षेत्रसवित्री
भारतधरणीयम्, मामकजननीयम्।।
भुवमवतीर्णा.....।।

पुण्यवतामियमेव हि नाकः
पुण्यजनानां रुद्रपिनाकः
पुण्यपराणामाश्रयलोकः
भारतधरणीयम्, मामकजननीयम्।।
भुवमवतीर्णा.....।।

– श्री जि. महाबलेश्वरभट्टः

# कल्ये वुध्यति मम जननी

कल्ये वुध्यति मम जननी
पश्चान्मामपि बोधयति।
उष्णजले न प्लावयति
नववसनं सा परिधारयति।।
कल्ये वुध्यति........।।

फाले तिलकं धारयति
पुनरक्ष्णोरञ्जनमालिखति।
सुन्दरकुण्डलयुगलेनाम्बा
कर्णद्वयमपि भूषयति।।
कल्ये वुध्यति........।।

पात्रे भोजनमानयति
माम् अङ्के दृढमुपवेशयति।
तत्करनिर्मितमन्नग्रासं
मामकवदने स्थापयति।।
कल्ये वुध्यति........।।

काककथां मां श्रावयति
सा शौनककथया भाययति।
श्रुत्वा रोदितुमुद्युक्ते मयि
गण्डे चुम्बनमर्पयति।।
कल्ये वुध्यति........।।

# हिन्दुराष्ट्रसङ्घटकं सुजनवन्दनीयम्

हिन्दुराष्ट्रसङ्घटकं सुजनवन्दनीयम्
केशवं स्मरामि सदा परमपूजनीयम्।।

राष्ट्रमिदं हिन्दूनां खलु सनातनम्
विघटनया जातं चिरदास्यभाजनम्
दुःखदैन्यपीडितमिति पीडितहृदयम्।।
।। केशवं स्मरामि.....।।

भगवद्ध्वज एव राष्ट्रगुरूरयं महान्
देशोऽयं खलु देवो जगति महीयान्
बोधयन्तमिति तत्त्वं सततस्मरणीयम्।।
।। केशवं स्मरामि.....।।

वीरव्रतमेव परं धर्मनिदानम्
सुशीलमेव लोकेऽस्मिन् परमनिधानम्
उपदिशन्तमिति सारं दृढ़माचरणीयम्।।
।। केशवं स्मरामि.....।।

नेतुं निजराष्ट्रमिदं परमवैभवं
नयत विलयमन्तर्गतसकलभेदभावम्
सङ्घमन्त्रमिति जपन्तमेकमेषणीयम्।।
।। केशवं स्मरामि.....।।

# संस्कृतेन पाठनम्

संस्कृतेन पाठनं संस्कृताय जीवनम्।
संस्कृतेन पाठनं संस्कृताय अर्पणम्।।

एकैकपदमपि निक्षिपाम तत्पथे
प्रत्यूहकण्टकम् उत्खनाम तत्पथे
लक्ष्यमुन्नतं तदा प्राप्नुयाम तत्पथे।।
।।संस्कृतेन.....।।

चिन्तितं व्रतमिदम् आचराम जीवने
स्वीकृतं व्रतमिदं न त्यजाम जीवने
परजनैरपि व्रतं कारयाम जीवने।।
।।संस्कृतेन.....।।

संस्कृतेन चिन्तनं मानसोल्लासनम्
संस्कृतेन लेखनं सर्वकार्यसाधनम्
संस्कृतेन भाषणं भरतवर्षभूषणम्।।
।।संस्कृतेन.....।।

# ज्योतिरुदेति

ज्योतिरुदेति ज्योतिरुदेति
नवयुगज्योतिरुदेति
जगदिदमखिलं पुरतोन्नेतुं
अभिनवलोकहितैषि ।।
।। ज्योतिरुदेति..... ।।

भारतजननी हृदयसमुद्गत
सत्यसनातनज्योतिः
भासुरचरितपुना रचनार्थं
समुदितमङ्गलज्योतिः ।।
।। ज्योतिरुदेति..... ।।

जागरयितुमिह सुप्तसमाजं
लोगयितुं नवमार्गं
पूर्वजवाञ्छामखिलामचिरात्
साधयितुं समुपैति ।।
।। ज्योतिरुदेति..... ।।

मुनिजनदर्शितपथमाश्रयदिदम्
एतिसमुज्ज्वलज्योतिः
प्रखरं ध्येयं निजहृदि विदधत्
अनुपमवृद्धिमुपैति ।।
।। ज्योतिरुदेति..... ।।

# सरलभाषा संस्कृतम्

सरलभाषा संस्कृतम्, सरसभाषा संस्कृतम्।
सरससरलमनोज्ञमङ्गलदेवभाषा संस्कृतम्।।

मधुरभाषा संस्कृतम्, मृदुलभाषा संस्कृतम्।
मृदुलमधुरमनोहरामृततुल्यभाषा संस्कृतम्।।
।। सरलभाषा.....।।

देवभाषा संस्कृतम्, वेदभाषा संस्कृतम्।
भेदभावविनाशकं खलु, दिव्यभाषा संस्कृतम्।।
।। सरलभाषा.....।।

अमृतभाषा संस्कृतम्, अतुलभाषा संस्कृतम्।
सुकृतिजनहृदि परिलसितशुभवरदभाषा संस्कृतम्।।
।। सरलभाषा.....।।

धर्मभाषा संस्कृतं कर्मभाषा संस्कृतम्।
धर्मकर्मप्रचोदकं खलु शर्मदायकसंस्कृतम्।।
।। सरलभाषा.....।।

भुवनभाषा संस्कृतम्, भवनभाषा संस्कृतम्।
भरतभुवि परिलसितकाव्यमनोज्ञभाषा संस्कृतम्।।
।। सरलभाषा.....।।

शस्त्रभाषा संस्कृतम्, शास्त्रभाषा संस्कृतम्।
शस्त्रशास्त्रभृदार्षभारतराष्ट्रभाषा संस्कृतम्।।
।। सरलभाषा.....।।

# मम देशो भारतम्

मम देशो भारतम्, मम भाषा संस्कृतम्।
मम देशो भारतम्, मम भाषा संस्कृतम्।।

जन्मभूमिरस्माकं भारतं भारतम्,
जननी नो वाङ्मयस्य संस्कृतं संस्कृतम्।
अनाद्यनन्त-विश्वविदित-शौर्य-धैर्य-कीर्तिकलित-
भारतीयाः वयम्, भारतीयाः वयम्, भारतीयाः वयम्।।
।। मम देशो भारतम्.....।।

पुण्यभूमिरस्माकं भारतं भारतं
जननी नः सर्वधर्मसंस्कृता संस्कृता।
हिन्दु-क्रिस्त-सिक्ख-मुस्लिं-जातिमतविभागरहित-
भारतीयाः वयम्, भारतीयाः वयम्, भारतीयाः वयम्।।
।। मम देशो भारतम्.....।।

जन्मभूमिरस्माकं भारतं भारतम्,
सर्वजनसमैक्यभावबन्धुरं भारतम्।
सत्य-धर्म-स्नेह-शान्ति-विश्वबन्धुभावभरित-
भारतीयाः वयम्, भारतीयाः वयम्, भारतीयाः वयम्।।
।। मम देशो भारतम्.....।।

# लोकसेवनार्थमेव जीवनम्

लोकसेवनार्थमेव जीवनम्
पूर्णमेतदर्पयाम सत्त्वरम् ।
दीनदेवपूजनेन पूर्णताम्
आप्नुयाम मर्त्यजन्मनो वयम् ।।
।। लोकसेवनार्थमेव..... ।।

जीवने महत्त्वपूर्णमद्भुतम्
ध्येयमीश्वरीयमेव स्वीकृतम् ।
स्वार्थभावनां विहाय सन्ततम्
ध्येयसिद्धये यतामहे ध्रुवम् ।।
।। लोकसेवनार्थमेव..... ।।

आगता भवेयुरापदस्सदा
निर्गता भवेयुरात्मसम्पदा ।
न त्यजाम ध्यैर्यमात्मनो वयम्
निर्भयाः पुरः प्रयाम सन्ततम् ।।
।। लोकसेवनार्थमेव..... ।।

ध्येयमेकमेव वयमुपास्महे
आत्मचिन्तनं सदैव कुर्महे ।
ध्येयसिद्धिमञ्जसा लभामहे
धन्यतामवाप्नुमः स्वजीवने ।।
।। लोकसेवनार्थमेव..... ।।

# वयं जानीमः

वयं जानीमः, हे वयं जानीमः
संस्कृतभाषा नैव कठिना।
कोमला सरला विश्वस्य मेखला
क्रियते तस्याः सदा वन्दना।

जानीमो वयं सा च अतिसरला
बन्धो! अतिसरला।
लालित्यमयी पुनः अतिकोमला
बन्धो! अतिकोमला।।

अस्ति सा विश्वभाषा परिपूर्णतेजसा
कोमला सरला विश्वस्य मेखला
क्रियते तस्याः सदा वन्दना।।

अमृतं निस्सरति यत्र सर्वदा
बन्धो! यत्र सर्वदा।
तस्याः कथने नास्ति काऽपि बाधा
बन्धो! काऽपि बाधा।।

सा तु संस्कृतभाषा अस्माकं मातृभाषा
कोमला सरला विश्वस्य मेखला
क्रियते तस्याः सदा वन्दना।।

# लक्ष्यमस्ति निश्चितम्

लक्ष्यमस्ति निश्चितं तथा विचारितम्
आचरेम मित्र! संस्कृतेन पाठनम्।।

आङ्ग्लभाषया हि आङ्ग्लमद्य पाठ्यते
हिन्दी हिन्दीभाषया तथैव शिक्ष्यते।
संस्कृतेन संस्कृतं कथं न पाठ्यते?
आचरेम मित्र संस्कृतेन पाठनम्।।
।। लक्ष्यमस्ति.....।।

बोधकारकं तथा सुदीप्तिकारकम्
रहस्यभेदनं विधाय तुष्टिदायकम्।
रसानुभूतिरेव येन जायते ध्रुवम्
आचरेम मित्र संस्कृतेन पाठनम्।।
।। लक्ष्यमस्ति.....।।

साध्यमस्ति संस्कृतेन शिक्षणं वरम्
श्रद्धया स्वनिष्ठया विवर्धितं त्वरम्।
नास्ति क्लिष्टतायुतं विरम्यते कथम्
आचरेम मित्र संस्कृतेन पाठनम्।।
।। लक्ष्यमस्ति.....।।

# भारतभक्ताः वयं समस्ताः

भारतभक्ता वयं समस्ताः ग्रामं नगरं गच्छामः।
शास्त्रशिक्षणं धर्मरक्षणं, देवभाषया विन्दामः।।

संस्कृतगङ्गाधाराऽपारा चित्तं चरितं तोषयति,
पूर्वजपरम्परां पुष्णाति राष्ट्रजीवनं पोषयति।
जाति-वर्ग-मत-भेदाननया वयमपहर्तुं यतेमहिः,
समरसभावमनस्का-लोके वयं बन्धुतां जनयामः।।
भारतभक्ताः..........।।

स्वर्गादपि गरीयसी दिव्या पुण्या वन्द्या वसुन्धरा,
वयमनया सस्नेहपालिता जननीयन्तु ऋतम्भरा।
मातृसेवने धातृवन्दने स्वस्य जीवनं यच्छामः,
भारतमाता सकले भुवने भातु पुनस्तद् वाञ्छामः।।
भारतभक्ताः..........।।

एको देशः एकसमाजः, भावस्तथा समानोऽपि,
वयं भारता वयं हिन्दवः, एक एव अभिमानोऽपि।
सत्यसनातनसंस्कृतिगौरवगानं मनसा गायामः,
राष्ट्रदेवताराधनशीला, वयं सर्वतो नन्दामः।।
भारतभक्ताः..........।।

गेहे गेहे भवतु गुञ्जिता, अमरा दिव्या वाणीयम्,
सरसा मधुरा मनुकुलमुखरा वेदमयी कल्याणीयम्।
कण्ठे कण्ठे लसतु संस्कृतं वयं सर्वथा काङ्क्षामः,
भवतु भारतं प्रियं भारतं, नूनं वयं विदधामः।।
भारतभक्ताः..........।।

# जय जय हे भगवती सुरभारती

जय जय हे भगवती सुरभारती
तव चरणौ प्रणमामः।
नादब्रह्ममयी जय वागीश्वरी
शरणं ते गच्छामः।।
।। जय जय हे.........।।

त्वमसि शरण्या त्रिभुवनधन्या
सुरमुनिवन्दितचरणा।
नवरसमधुरा कवितामुखरा
स्मितरुचिरुचिरा भरण्या।।
।। जय जय हे.........।।

आसीना भव मानसहंसे
कुन्दतुहिनशशिधवले।
हर जडतां कुरु वोधिविकासं
सितपङ्कजतनुविमले।।
।। जय जय हे.........।।

ललितकलामयि ज्ञानविभामयि
वीणापुस्तकधारिणी।
मतिरास्तां नो तवपदकमले
अयि कुण्ठविषहारिणि।।
।। जय जय हे.........।।

# पठ्यतां हि संस्कृतम्

पठ्यतां हि संस्कृतं ज्ञायतां नु वाङ्मयम्।
संस्कृतस्य पाठनाय दीयतां स्वजीवनम्।।

प्रेमशुद्धिसम्प्लुतं त्यागसलिलवर्धितं
कष्टकोटिपावितं स्वार्थरहितचेष्टितम्।
अचललक्ष्यकेन्द्रितं सकलशीलभूषितं
राष्ट्रधर्मरक्षणाय स्यान्मदीयजीवनम्।।१।। पठ्यताम्।।

परोपदेशवर्जकं परोपकारकारकं
द्वेषदोषनाशकं क्रोधमोहलोपकम्।
स्नेहभावगुम्फितं क्षात्रवीर्यपूरकं
ऐक्यबन्धवर्धनाय स्यान्मदीयजीवनम्।।२।। पठ्यताम्।।

जातिभेदवारकं दीनदलितसेवकं
स्वाभिमानपोषकं सामरस्य साधकम्।
ज्ञानविनयसंयुतं विपुलगुणगुणान्वितं
लोकशक्तिवर्धनाय स्यान्मदीयजीवनम्।।३।। पठ्यताम्।।

जीवनस्य वाञ्छितं संस्कृतस्य वैभवं
मामकीनयौवनं संस्कृतार्थमर्पितम्।
नैव किमपि सञ्चितं नास्ति किमपि काङ्क्षितं
संस्कृतप्रसारणाय स्यान्मदीयजीवनम्।।४।। पठ्यताम्।।

# मम माता देवता

मम माता देवता।
मम माता देवता।।

अतिसरला मयि मृदुला
गृहकुशला सा अतुला।।
मम माता.........।।

पाययति दुग्धम्, भोजयति भक्तम्।
लालयति नित्यम्, तोषयति चित्तम्।।
मम माता.........।।

सायंकाले नीराजयति
पाठयति च मां शुभङ्करोति
श्लोकः – शुभं कुरु त्वं कल्याणम्
आरोग्यं धनसम्पदः।
दुष्टबुद्धिविनाशाय
दीपज्योतिर्नमोस्तु ते।।
पाठयति च मां शुभङ्करोति।।
मम माता.........।।

रात्रौ अङ्के मां स्वापयति
मधु मधु मधुरं गीतं गायति
आ आ आ आ आ आ आऽऽऽऽऽ।।
मम माता.........।।

# मा कुरु दर्पम्

मा कुरु दर्पम्, मा कुरु गर्वं
मा भव मानी मानय सर्वम्।
मा भज दैन्यं मा भज शोकं
मुदितमना भव मोदय लोकम्।।

मा वद मिथ्या मा वद व्यर्थं
न चल कुमार्गे न कुरु अनर्थम्।
पाहि अनाथं पालय दीनं
लालय जननी-जनक-विहीनम्।।

तनय पाठय तनयां पाठय
शिक्षय सुगुणं दुर्गुणं वारय।
कुरु उपकारं कुरु उद्धारम्
अपनय भारं त्यज अपकारम्।।

मा पिब मादकवस्तु अपेयं
मा भज दुर्व्यसनं परिहेयम्।
मा नय क्षणमपि व्यर्थं समयं
कुरु सकलं निजकार्यं सभयम्।।

– श्री वासुदेव द्विवेदी शास्त्री

# वयं बालका भारतभक्ताः

वयं बालका भारतभक्ताः
वयं बालिका भारतभक्ताः।
वयं हि सर्वे भारतभक्ताः
पृथ्वीं स्वर्गं जेतुं शक्ताः।।
वयम्.............।।

वयं सुधीराः वयं सुवीराः
हृष्टमानसाः पुष्टशरीराः
भूरि पठामो भूरि लिखामो
भवितास्मो जनहिते नियुक्ताः।।
वयम्.............।।

जाति-धर्म-मत-भेदं त्यक्त्वा
भारतवर्षं पूज्यं मत्त्वा
भगवद्भावं हृदये धृत्वा
भारतसेवायामनुरक्ताः।।
वयम्.............।।

– डा० नरेन्द्रः

# राघव! माधव! सीते! ललिते!

राघव! माधव! सीते! ललिते!
विमानयानं रचयाम।
नीले गगने विपुले विमले
वायुविहारं करवाम।।

उन्नतवृक्षं तुङ्गं भवनं
क्रान्त्वाकाशं खलु याम।
कृत्वा हिमवन्तं सोपानं
चन्दिरलोकं प्रविशाम।। १।।
राघव! माधव!......।।

शुकश्चन्द्रः सूर्यो गुरुरिति
ग्रहान् हि सर्वान् गणयाम।
विविधाः सुन्दरताराश्चित्वा
मौक्तिकहारं रचयाम।। २।।
राघव! माधव!......।।

अम्बुदमालाम् अम्बरभूषाम्
आदायैव हि प्रतियाम।
दुःखित-पीडित-कृषिकजनानां
गणेषु हर्षं जनयाम।। ३।।
राघव! माधव!......।।

– डा० विश्वासः

# पुत्री मम खलु निद्राति

पुत्री मम खलु निद्राति
पुत्री मम खलु निद्राति।

सुन्दरशयने सुखमयवसने
पुत्री मम खलु निद्राति।।

रे रे वायस! कर्कशकण्ठ
मा रट मा रट कर्णकठोरम्।
श्रान्ता क्लान्ता पुनरनुनीता
पुत्री मम खलु निद्राति।। १।।

म्याँव म्याँव् मा कुरु घोरविरावं
चल चल रे खल! चोरबिडाल!
स्निग्धा मुग्धा सेवितदुग्धा
पुत्री मम खलु निद्राति।। २।।

उच्चैर्मा भष शुनक! वराक!
भौ भौ मा कुरु कार्यविहीन!
विमला कुशला सुमनोमृदुला
पुत्री मम खलु निद्राति।। ३।।

रे रे मशक! मा कुरु गानं!
मा स्पृश मा दश रक्तपिपासो!
सुदती सुमुखी शोभनगात्री
पुत्री मम खलु निद्राति।। ४।।

– डा० विश्वासः

# चटक! चटक!

चटक! चटक! रे चटक!
चिवँ्, चिवँ्, कूजसि त्वं विहग!
नीडे निवससि सुखेन डयसे
खादसि फलानि मधुराणि।
विहरसि विमले विपुले गगने
नास्ति जनः खलु वारयिता।।
चटक! चटक!......।।

मातापितराविह मम न स्तः
एकाकी खलु खिन्नोऽहम्।
एहि समीपं चिवँ् चिवँ् मित्र
ददामि तुभ्यं बहुधान्यम्।।
चटक! चटक!......।।

चणकं स्वीकुरु पिब रे नीरं
त्वं पुनरपि रट चिवँ् चिवँ् चिवँ्।
तोषय मां कुरु मधुरालापं
पाठय मामपि तव भाषाम्।
चटक! चटक!......।।

– डा० विश्वासः

# एकः श्रृगालः

एकः श्रृगालः
एकः श्रृगालः, वनं गच्छति
पिपासा, तस्य बुभुक्षा
पिपासया बुभुक्षया च वनं गच्छति
सः वनं गच्छति, सः वनं गच्छति।

तत्र गच्छति, किमपि न लभते
इतोऽपि गच्छति, किमपि न लभते
श्रान्तः जायते, खिन्नः जायते
सः श्रान्तः जायते, खिन्नः जायते
किं च करोति? सः किं च करोति?

वामतः पश्यति, दक्षिणतः पश्यति
अग्रतः पश्यति, पृष्ठतः पश्यति
स्वेदः जायते, तृषा जायते
तस्य स्वेदः जायते, तृषा जायते
किं च करोति, सः किं च करोति?

पश्यति द्राक्षालतां
सः पश्यति द्राक्षाफलम्
उपरि उपरि लतासु दृश्यते च तत्फलम्
अनुक्षणं तन्मुखे रसः जायते
किं च करोति? सः किं च करोति?

एकवारम् उत्पतति, द्विवारम् उत्पतति
त्रिवारम् उत्पतति पुनः पुनः उत्पतति
स्वेदः जायते तस्य श्रमः जायते
किं कथयति? सः किं कथयति?

आम्लं द्राक्षाफलम्
आम्लं द्राक्षाफलम्
इत्येवं कथयति, स पलायते
इत्येवं कथयति, स पलायते।।

– डा० नारायणभट्टः

## मातः! चन्दिर एकाकी

मातः! चन्दिर एकाकी
कस्मात् गगने सञ्चरति?
मातरं पितरं गृहं विहाय
रात्रौ सततं सञ्चरति।।

वायुः वेगेन तं नयति
सूर्यः किरणैः तापयति।
मेघो जलेन आर्द्रयति
नो कोऽपि तं परिपालयति।।

अम्ब! चन्दिरमानयतु
अस्मत्-गेहे स्थापयतु।
तेन सह अहं क्रीडामि
खादामि पिबामि नन्दामि।।

# अयं मम हस्तः

अयं मम हस्तः अयं मम पादः
अयं मम कण्ठः अयं मम ओष्ठः।
अयं मम दन्तः अयं मम गुल्फः
अयं मम स्कन्धः अयं मणिबन्धः।।

इयं मम नासा इयं मम जिह्वा
इयं मम ग्रीवा इयं मम टङ्का।
इदं मम नेत्रम् इदं मम मुखम्
इदं मम हृदयम् इदं मम उदरम्।।

# पुरः पुरः प्रयाहि रे

पुरः पुरः प्रयाहि रे प्रगाय मातृवन्दनम्।
स्वजन्मभूमिरक्षणे प्रदेहि वीरजीवनम्।।

प्रयाहि देशगौरवस्वराष्ट्रकेतुमुद्धरन्।
पदं पदं प्रगच्छ रे विजेतृभावमुद्भवन्।।

शिरोऽस्तु ते समुन्नतं तवास्तु मा क्वचिद् भयम्।
प्रभुस्तवास्ति पार्श्वतः सुशस्त्रसज्जितः स्वयम्।।

पुरः पुरः प्रधाव रे बलं तावद्य वर्धताम्।
यतः प्रभुस्ततो जयः ततः सुवीर युध्यताम्।।

रणे धृतिः सुकौशलं प्रवर्धतां मनोबलम्।
जयस्तवास्ति निश्चितः कुरु स्वधर्मपालनम्।।

# चिरनवीना संस्कृता एषा

चिरनवीना संस्कृता एषा, गीर्वाणभाषा
चिरनवीना संस्कृता एषा।

महतो भूतस्य निःश्वसितम्
अस्ति यस्याम्, अतिपुरातन-वेदसाहित्यम्
शास्त्रपूरैः स्मृतिविचारैः
वरकवीनां काव्यसारैः
चित्रिता मञ्जुला मञ्जूषा, मञ्जुला भाषा।।
चिरनवीना.......।।

वाल्मीकि-व्यास-मुनिरचितम्,
रामायणं महाकाव्यं महाभारतम्
क्लैब्यकिल्बिष-कलित-पार्थ
कार्यविषये योजयन्ती
अस्ति यस्यां भगवती गीता, भगवता कथिता।।
चिरनवीना.......।।

मातृभाषा मातृभाषाणाम्, भवितुमर्हा
राष्ट्रभाषा भारतीयानाम्
भवतु भाषाद्वेषनाशः
सर्वथा उद्घोषयामः
भारतीया भारती एषा, अनुपमा सरसा।।
चिरनवीना.......।।

– श्री नारायणभट्टः

# चल चल पुरतो

चल चल पुरतो निधेहि चरणम्
सदैव पुरतो निधेहि चरणम् ।। ध्रुवम् ।।

गिरीशिखरे तव निजनिकेतनम्
समारोहणं विनैव यानम्
आत्मबलं केवलं साधनम् ।। १ ।।
।। सदैव पुरतो..... ।।

पथिपाषाणा विषमा प्रखरा
धैर्यञ्चोऽपि च परितो घोरः
सुदुष्करं खलु यद्यपि गमनम् ।। २ ।।
।। सदैव पुरतो..... ।।

जहीहि भीतिं ह्रिदि भज शक्तिम्
देहि देहि रे भगवती भक्तिम्
कुरु कुरु सततं धेयस्मरणम् ।। ३ ।।
।। सदैव पुरतो..... ।।

# वन्दे तां भूदेवीम् आर्यमातरम्

वन्दे तां भूदेवीम् आर्यमातरम्
जयतु जयतु पदयुगलं ते निरन्तरम्
।। वन्दे तां......।।

शुभ्र-शरच्चन्द्र-युक्त-चारु-यामिनीम्
विकसित-नव-कुसुम-मृदुल-दाम-शोभिनीम्
मन्दस्मितयुक्त-वदन-मधुर-भाषिणीम्
सुजलां सुफलां सरलाम्
शिव-वरदाम् चिर-सुखदाम्,
मुकुलरदाम्, आर्यमातरम्।। वन्दे तां.....।।

हिम-नगजाम् स्वाभिमान-बुद्धि-दायिनीम्
सह-पृतनाम् अमित-भुजाम्-तनय-तारिणीम्
अमितामित-कोटि-कण्ठ-जय-निनादिनीम्
कमलाम् अमलाम् अतुलाम्
बल-करणीं रिपु-हरणीम्
मद-दमनीम् आर्यमातरम्।। वन्दे तां.....।।

धर्मस्त्वं शर्मस्त्वं त्वं यशोबलम्
शक्तिस्त्वं भक्तिस्त्वं कर्म-चाखिलम्
प्रति सदनं प्रतिमा ते त्वं महाफलम्
धरणीं भरणीं जननीम्
कविप्रतिभां मतिसुलभाम्
जगदम्बां राष्ट्रमातरम्।। वन्दे तां.....।।

# वन्दे मातरम्

वन्दे मातरम्।
सुजलां सुफलां मलयजशीतलाम्
शस्यश्यामलां मातरम्।

शुभ्र-ज्योत्स्ना-पुलकित-यामिनीम्
फुल्लकुसुमित-द्रुमदलशोभिनीम्
सुहासिनीं सुमधुरभाषिणीम्
सुखदां वरदां मातरम्।। वन्दे मातरम्.....।।

सप्तकोटिकन्ठ-कल-कल-निनादकराले
द्विसप्तकोटि भूजैर्धृतखरकरवाले
अवला केन मा एत वले!
बहुबलधारिणीं नमामि तारिणीम्
रिपुदलवारिणीं मातरम्।। वन्दे मातरम्.....।।

तुमि विद्या तुमि धर्म, तुमि हृदि तुमि मर्म
त्वं हि प्राणाः शरीरे
बाहुते तुमि मा शक्ति, हृदये तुमि मा भक्ति
तोमारि प्रतिमा गड़ि मन्दिरे मन्दिरे।। वन्दे मातरम्.....।।

त्वं हि दुर्गा दशप्रहरधारिणी
कमला-कमलदल-विहारिणी
वाणी विद्यादायिनी, नमामि त्वाम्
नमामि कमलाम् अमलाम् अतुलाम्
सुजलां सुफलां मातरम्।। वन्दे मातरम्.....।।

श्यामलां सरलां सुस्मितां भूषिताम्
धरणीं भरणीं मातरम्।। वन्दे मातरम्.....।।